श्रीमतेरामानन्दा[illegible]मः ॥ अथरामपद्धतिप्रारंभः ॥
ॐ गुरुर्ब्रह्मागुरुर्विष्णुर्गुरुर्देवोमहेश्वरः । गुरुरेवपरंब्रह्म
तस्मैश्रीगुरवेनमः ॥१॥ अज्ञानातिमिरांधस्य ज्ञानांज-
नशलाकया । चक्षुरुन्मीलितंयेन तस्मैश्रीगुरवेनमः
॥२॥ अखंडमंडलाकारं व्याप्तंयेनचराचरम् । तत्पदंद-
र्शितंयेनतस्मैश्रीगुरवेनमः॥३॥ सर्वश्रुतिशिरोरत्नं वि-
राजितपदांबुजम् । वेदांताम्बुजसूर्य्यायतस्मैश्रीगुर
वेनमः॥४॥ यस्यस्मरणमात्रेणज्ञानमुत्पद्यतेस्वयम् ।
सएवसर्वसम्पात्तिस्तस्मैश्रीगुरवेनमः ॥५॥ अथगुरु

रा०

ध्यानम् ॥ ब्रह्मरंध्रास्थितेपद्मेसहस्रदलशोभिते ॥ श्रीगु
रुंपरमात्मानंसहस्रादित्यसन्निभम् ॥ १ ॥ द्विनेत्रंद्विभु
॥१॥ जंचैवध्यायेदखिलसिद्धिदं ॥ किरीटादिवनमालाङ्गा
नमुद्रोपशोभितं ॥ २ ॥ कर्मणामनसावाचासदाआरा
धयेद्गुरुम् । दीर्घदंडवन्नमस्कृत्य निर्लज्जोगुरुसन्नि
धौ ॥ ३ ॥ सप्तसागरपर्यन्ततीर्थस्नानादिकंफलं । गुरो
रंघ्रिजलंबिन्दुस्तत्कोटयंशेनदुर्लभम् ॥ ४ ॥ श्रीगु
रुंपंचोपचारैः सम्पूज्य । गुरुपादोदकंपीत्वा गुरोरु ॥१॥
च्छिष्टभोजनम् । गुरुमूर्तेस्सदाध्यानंगुरुमंत्रंसदाज



प०

पेत् ॥ ५ ॥ अखंडसच्चिदानंदमखिलेंद्रियगोचरम् ।
भक्तवत्सलभक्तेशमुत्पन्नंद्राविडेषुतम् ॥ ६ ॥ श्रीरा
मानुजयोगींद्रं मत्यादिशरणंभजे । श्रीरामाख्यंपरं
नित्यं जीवन्मुक्तस्वरूपिणं ॥ ७ ॥ ज्ञानमुद्राधरंरामं
सच्चिदानंदविग्रहम् । ब्राह्ममुहूर्तेचोत्थायचिंतयेद्रघु
नंदनम् ॥ ८ ॥ इतिश्रीगुरुध्यानं ॥ अथप्रातःकालकृ
त्यप्रारंभः ॥ समुद्रमेखलेदेवि पर्वतस्तनमंडले । वि
ष्णुपत्निनमस्तुभ्यं पादस्पर्शंक्षमस्वमे ॥ ९ ॥ इतिपृ
थ्वींसंप्रार्थ्य श्रीमान्साधकेन्द्रोदक्षिणांगेनसमुत्था

रा० य श्वासानुसारेणतस्यांपादौनिधाय शौचाय व्रजेत् प०
गत्वातीर्थौदकंतत्रानिक्षिप्यासनसाधनं । अथशौचादि
॥२॥ कंकर्तुमाहरेन्मृत्तिकाबुधः ॥ अथशौचसमये आ
दौमृत्तिकाग्रहणविधिः । पुलस्त्यसंहितायां । मृद्गौरा
ब्राह्मणानांचवैष्णवानांविशेषतः । नृपाणांलोहिता
ज्ञेया वैश्यानांतुहरिच्छुभा ॥ स्त्रीशूद्राणामंत्यजानां
कृष्णवर्णाप्रतिष्ठिता । सरोजगालिकायाम् । विना
काष्ठेनलोहेन चोद्धृतायाचमृत्तिका । श्वानाविष्ठास ॥२॥
माज्ञया शौचकालेविवर्जयेत् । पूर्वंसंपार्श्वपृष्ठाथिवीं

नित्यंवैमंत्रपूर्वकं । शुद्धमृत्तिकामानीय त्रिभागंकार
येद्बुधः । आद्यंलिंगेगुदेदेशे द्वितीयंकरपादयोः ॥
तृतीयंभागमादाय स्नानकालेप्रलेपयेत् ॥ अथखन
नमंत्रः । येनत्वांखनतिब्रह्मा येनत्वा रुद्रकेशवौ ।
तेनत्वांखनयिष्यामि शुद्ध्यर्थंकरपादयोः । इतिमृ
त्तिकाखननमंत्रः । ॐ सलिलस्यमुखंदृष्ट्वा विष्णु
रूपंनमोस्तुते ॥ क्रियार्थमहंगृह्णामि आपोदेव्यः पुनंतु
माम् ॥ इतिजलप्रार्थनामंत्रः ॥ ततोबहिर्गच्छेत् ॥
नैर्ऋत्यांदिशिगत्वासूर्यंदक्षिणेदत्वा वस्त्रेणाशिरःप्रा

रा० वृत्ययज्ञोपवीतं दाक्षिणकर्णौनिधाय शौचमंत्रंपठेत् ॥ प०
॥३॥ उत्तिष्ठंतुसुराःसर्वे यक्षगंधर्वकिन्नराः ॥ पिशाचागुह्य
काश्चैव मलमूत्रंकरोम्यहं ॥ इति मंत्रेणतालत्रयंकृ
त्वाउपविशेत् ॥ अथमृत्तिकाविधिः । एकालिंगेगुदे
पंच तथावामकरेदश । उभयोःसप्तदातव्या चरणौ
चत्रिभिस्त्रिभिः । एतद्गृहस्थप्रमाणम् । ब्रह्मचारिणां
द्विगुणम् ॥ वानप्रस्थस्यात्रिगुणम् । श्रीरामभक्तस्य
दंडिनश्चतुर्गुणम् ॥ इतिमृत्तिकानियमः ॥ अश्वक्रांतेर ॥३॥

थक्रांते विष्णुक्रांतेवसुंधरे ॥ मृत्तिकेहरमेपापं यन्मया

पूर्वसंचितम् ॥ इतिकरचरणदेहशुद्धिमंत्रः ॥ जलंद हंतिपापानि कमंडलुगतंतुयत् ॥ गंगातोयसमंनित्यं जलपात्रंचशुद्ध्यति ॥ इतितुंबिकापात्रशुद्धिमंत्रः ॥ जलेचाग्निःस्थलेचाग्निराग्निश्चवायुमंडले ॥ त्रिभिरग्नि प्रकाशैश्च काष्ठपात्रंचशुद्ध्यति ॥ इतिकाष्ठपात्रशुद्धि मंत्रः ॥ कनिष्ठिकापरीणाहं सत्वचंनिर्व्रणमृजु । चूत पत्रंसदाग्राह्यं प्रतिषिद्धेदिनेदिने ॥ इतिदंतकाष्ठवि धिः ॥ आयुर्बलंयशोवर्च्चः प्रजाःपशुवसूनिच ॥ ब्रह्मप्र ज्ञांचमेधांच त्वन्नोदेहिवनस्पते ॥ इतिदंतकाष्ठच्छेद

रा० नमंत्रः । खदीरश्चकदंबश्च करंजश्चवटस्तथा । चिंचि प०
॥४॥ णीवेणुपादश्च आम्रोनिंबस्तथैवच । आपमार्गश्च
बिल्वश्च अर्कश्चोदुंबरस्तथा । एतेषांकाष्ठमृजुं वित
स्तिमात्रंगृहीत्वा । दन्तरूपमधोगंच दंतधावनमु
त्फलं । कुर्वंतिचत्रयोदेवा ममदोषोनदीयते ॥ इति
दंतधावनमंत्रः ॥ दक्षिणेपश्चिमेचैव दंतधावनमाच
रेत् ॥ तस्यस्नानफलंनास्ति तौदन्यस्यांसमाचरे
त् ॥ इतिमिताक्षरायाम् ॥ ततोदेहकृत्यं दंतधावना ॥४॥
दिकंकृत्वाभगवन्नामोच्चारणंकुर्यात् । नद्यादौती

थैं गत्वातत्रहस्तौपादौमुखंचप्रक्षाल्यआचमनंकुर्या
त् ॥ अथस्नानविधिः ॥ नाभिमात्रेजलेस्थित्वा । मू
लेनशिखांमुक्त्वामलापकर्षणस्नानंकृत्वा । गाय
त्र्याशिखाबंधनंकृत्वा । ॐविष्णुः ॐविष्णुः ॐवि
ष्णुरितित्रिराचम्य । कात्यायनसंहितायां । गोकर्णा
कृतिहस्तेन माषमात्रंजलंपिबेत् ॥ तन्न्यूनमधिकंचै
व सुरापानसमंभवेत् । अथषडंगन्यासः ॥ ॐवाक्
ॐवाक् । ॐप्राणः ॐप्राणः । ॐचक्षुः ॐचक्षुः । इति
षडंगन्यासः ॥ अथसंकल्पः ॥ ॐ आद्यपुराणपुरुषोत्त

राº मायश्रीब्रह्मणेनमः । ॐ अद्यश्रीब्रह्मणोद्वितीयपरा पº
॥५॥ र्द्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वंतरे अष्टाविंश
तिकालियुगे कलिप्रथमचरणे जंबूद्वीपे भरतखंडे
आर्यावर्ते अमुकसंवत्सरे अमुकमासे अमुकपक्षे
अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकतीर्थे
अमुकस्थाने अमुकगोत्रः अमुकदासः सीसीता
रामकैंकर्यसिद्ध्यर्थं प्रातःस्नानमहंकरिष्ये ॥ इतिसंक
ल्पः ॥ जलेनप्रणवात्मकांत्रिकोणंकृत्वाऽष्टदलमंडलं ॥५॥
विलिख्य ॥ सूर्यमंडलादंकुशमुद्रयासर्वतीर्थान्यावा

ह्य। ॐब्रह्मांडोदरतीर्थानि करैःस्पृष्टानितेरवे। ते
नसत्येनमेदेव तीर्थंदेहिदिवाकर। ॐ गंगेचयमुने
चैव गोदावरिसरस्वति। नर्मदेसिंधुकावेरि जले
स्मिन्सन्निधिंकुरु ततोधेनुमुद्राप्रदर्शयेत। मंत्रद्व
येनतीर्थान्यावाह्य। कुंभकमुद्रयाशिरसित्रिरभिषि
च्य मूलमंत्रमुच्चारयेत्। ततोनिरुध्यसप्तछिद्राणि
त्रिर्निमज्योन्मज्यजलेनात्रिराचम्य। ततोरामेति
मंत्रेणजलेनातिलकंधारयेत्। मूलेनश्रीरामंसंतर्प
यामिस्वाहा इतित्रिवारंतर्पयित्वा। ततः स्नानं

रा० समापयेत् । तत्रसंध्यामाचरेत् । यद्वास्वस्थानं प०
॥६॥ गच्छेत् । ततोजलेनवाससांशुद्धिंकुर्यात् । ॐ अ
पवित्रःपवित्रोवा सर्वावस्थांगतोपिवा । यःस्मरेत्पुं
डरीकाक्षं सबाह्याभ्यंतरः शुचिः । इतिमंत्रेणवस्त्राणि
शोधयेत् । ततःआसनशोधनाविधिः । गोमयेनशु
द्धमृदा भूमिमादौप्रलेपयेत् । कृष्णाजिनंकुशासी
नमासनंवैप्रकल्पयेत । अपवित्रः पवित्रोवेतिमंत्रे
णासनंप्रोक्षयेत् । इतिआसनाविधिः । ॐभूर्भुवःस्वः ॥६॥
कूर्मायनमः । इतिमंत्रेणधेनुमुद्रांप्रदर्शयेत् । ततः ।

ॐ पृथ्वित्वयाधृतालोका देवित्वंविष्णुनाधृता ।
त्वंचधारयमांदेवि पवित्रंकुरुचासनम् । इतिमंत्रमु
च्चारयेत् ॥ ततआसनेदाक्षिणपदंनिधाय ॥ तत्रोप
विश्य ॥ पंचसंस्कारान्भावयेत् अथयजुर्वेदीयपं
चसंस्काराः संप्रदायानुसारेणयथाक्रमंप्रदर्श्यंते ॥
प्रथमंचयजुर्वेदेहिरण्यकेशिशाखायां ॥ उर्द्ध्वपुंड्रंहरि
पादाकृति आत्मनोनिर्द्धारयाति । मध्यच्छिद्रमूर्द्ध्वपुं
ड्रंयोधारयाति सपरस्याप्रियोभवति सपुण्यवान्मु
क्तिभाग्भवति । इतिश्रुतिप्रथमः संस्कारः ॥ १ ॥

रा० धृतोर्ध्वपुंड्रूचक्रधारीविष्णुंपरंध्यायतियोमहात्मा ॥ प०
॥७॥ त्वरेणमंत्रेण सदाहृदिस्थितं परात्परं यन्महतोमहा
न्तम् ॥ इतिश्रुतिद्वितीयःसंस्कारः ॥ २ ॥ पशुपुत्रा
दिकान्सर्वान्गृहोपकरणानिच ॥ अंकयेच्छंखच
क्राभ्यां नामकुर्यात्त्ववैष्णवं ॥ इतिश्रुतितृतीयःसंस्का
रः ॥ ३ ॥ ॐ रांरामायनमः । इतिमंत्रः ॥ अथर्ववेदेरा
मतापनीयोपनिषदिचतुर्थःसंस्कारः ॥ ४ ॥ शंखच
क्रधरोविद्वान्मालांतुलसिजांधृतः ॥ जीवन्मुक्तः ॥७॥
इतिश्रुतिपंचमःसंस्कारः ॥ ५ ॥ तथाचागमे ॥ पुंड्र

मुद्रातथानाम मंत्रायागश्चपंचमः ॥ अमीहिपंचसं
स्काराः परमैकान्तहेतवः ॥ इतिपंचसंस्कारैः संस्कृ
तो यः स वैष्णवः नान्यथेतिभावः ॥ सरामस्यदासो
भवति । दासोहमस्मियोयंस्मरेत्सतद्रूपोभवति ।
कीटभृंगन्यायेनस्वस्वरूपस्मरणात् ॥ तरतिशोक
मात्मविद्ब्रह्मविद्ब्रह्मैवभवति ॥ अथतुलसीभगवतो
भेदाभावेयागस्थानेतुलसीधारणंनविरोधः ॥ पुंड्रा
र्थंमृद्ग्रहणस्थानानि। श्रीरंगेवेंकटाद्रौच श्रीकूर्म्मे याद
वाचले प्रयागेनारसिंहाद्रौ वाराहेतुलसीवने । द्वार

 वत्यांशुभेरम्येवासुदेवहृदयतथा । सिंधुतीरेचवल्मी 
 के हरिक्षेत्रेविशेषतः । हरिपादोदकंयत्र प्रवाहयातिनि-
त्यशः । एतेषांचैवतीर्थानां मृत्तिकांचहरेद्बुधः । सुष्टु
छिद्रान्वितंपुंड्रंहारिद्रासंयुतंशुभं सद्योमुक्तिप्रदंनित्यं
धारयेच्चसदानरः । तिलकद्रव्येतारकसंपुटितंरामेति
बीजंविलिख्यमूलमंत्रेण दशवारमाभिमंत्र्यमूर्तिपंज
रेण । मूलेनवाललाटादिद्वादशांगेषुद्वादशतिलका
न्नाविधाय । तेषु श्रीचूर्णंधारयेद्बुधः । श्राद्धंहोमंत
थादानं स्वाध्यायपितृतर्पणं । भस्मीभवतितत्सर्वं 

मूर्द्धपुंड्रंविनाकृतं । अच्छिद्रमूर्द्धपुंड्रंतु यःकरोतिद्वि
जाधमः । कल्पकोटिसहस्राणि रौरवंनरकंव्रजेत् ।
तस्माच्छिद्रान्वितंपुंड्रं धारयेद्विजसत्तमः । अंगु
लद्वयमात्रंतु मध्येछिद्रंप्रकल्पयेत् । पार्श्वेचांगुल
मात्रंतु ऊर्ध्वपुंड्रस्यलक्षणम् । वर्तुलंतिर्यगच्छिद्रंन्ह
स्वंदीर्घंततस्तनु । वक्रंविरूपंबद्धाग्रं छिन्नमूलंपद
च्युतम् । अशुभ्रंरूक्षमारक्तं तथानांगुलिकल्पित
म् । विगंधमपसंख्यानं पुंड्रमाहुरनर्थकम् । उत्तमं
चतुरांगूलं त्र्यंगुलंचापिमध्यमम् । कनिष्ठंतुद्व्यंगुलं

रा० स्यादंगुलार्द्धंनचाचरेत । तस्माच्छिद्रान्वितंपुंड्रं प०
॥१॥ हरिद्रासंयुतंशुभम् । पद्मपुराणे । द्वादशंतुविप्राणां
वैष्णवानांतथैवच । पुंड्रंधारयेद्विधिवत्हरिद्रासं
युतंशुभम् । चत्वारिभूभुजांचैव पुंड्राणिद्वेविशांतथा ।
एकंपुंड्रंतुनारीणांशूद्राणांचविधीयते । अथतिलक
विधिः । रामायुधंधनुर्बाणंधारयेच्चैवमूर्धनि । ललाटेके
शवायेतिधारयेच्चतुरंगुलम् । ॐ कंकेशवायनमः ॥
॥ १ ॥ चतुश्चक्रधरंदेवं शुद्धजांबूनदप्रभं । नाभौना ॥१॥
रायणायेति धारयेच्चदशांगुलम् । ॐ ननारायणाय

नमः ॥ २ ॥ चतुःशंखधरंदेवं नीलजीमूतसन्निभम् । हृद
येमाधवायेति धारयेदंगुलाष्टकम् । ॐ मंमाधवाय
नमः ॥ ३ ॥ इंदीवरदलश्यामं चतुर्हस्तंगदाधरं ।
गोविंदायेतिकंठेच धारयेच्चतुरंगुलम् । ॐ गंगोविंदा
यनमः ॥ ४ ॥ चतुर्भुजंधनुष्मंतं चंद्रभासासमप्रभ
म् । विष्णुंचदक्षिणेकुक्षौ धारयेच्चदशांगुलम् । ॐ
वंविष्णवेनमः ॥ ५ ॥ चतुर्हलधरंदेवंपद्मकिंजल्कस
न्निभम् । मधुसूदनंबाहुमध्ये धारयेदंगुलाष्टकम् ।
ॐ मंमधुसूदनायनमः ॥ ६ ॥ चतुर्मूलधरंदेवमर

रा० विंदाममेवच । त्रिविक्रमंदक्षिणांगं धारयेच्चतुरंगुल प०
॥१०॥ म् । ॐ त्रिंत्रिविक्रमायनमः ॥ ७ ॥ चतुःखड्गधरं
देवं ज्वलज्ज्वालानलप्रभम् वामनंवामकुक्षौतु
धारयेच्चदशांगुलम् । ॐ वंवामनायनमः ॥ ८ ॥
चतुर्वज्रधरंदेव तरुणादित्यसन्निभम् । श्रीधरंबाहु
वामेच धारयेदंगुलाष्टकं । ॐ श्रींश्रीधरायनमः ॥ ९ ॥
पट्टीशायुधधरंदेवं पुंडरीकाक्षमेवच । हृषीकेशंतुवा
मांगे धारयेच्चतुरंगुलम् । ॐ ह्रींहृषीकेशायनमः ॥ ॥१०॥
॥ १० ॥ चतुर्मुद्गरधरंदेवं विद्युत्सदृशवर्चसं । पृष्ठेतु

पद्मनाभंच धारयेच्चतुरंगुलम् । ॐ पंपद्मनाभायनमः
॥ ११ ॥ सर्वायुधधरंदेवं सहस्रादित्यसान्निभम् । दामो
दरंकंठपृष्ठे धारयेच्चतुरंगुलम् । ॐ दंदामोदरायनमः
॥ १२॥ चतुःपार्श्वधरंदेवामिन्द्रगोपसमप्रभम्॥तत्प्रक्षा
लिततोयेन वासुदेवेतिमूर्धनि ॥ १३ ॥ स्पृशेतसर्वाणि
पुंड्राणितत्तन्मंत्रैःपृथक्पृथक् । अनामिकाशांतिदा
स्यादायुर्दामध्यमातथा । तर्जनीमोक्षदाप्रोक्ता अं
गुष्ठापुष्टिदायिका । ततःश्रियंचधारयेत । ॐ श्रीदे
वीप्रथमंनाम द्वितीयममृतोद्भवा । तृतीयंकमलाप्रो

क्ता चतुर्थंचंद्रशोभिनी । पंचमंतुवरारोहा षष्ठंस्याद्ध
रिवल्लभा । सप्तमंविष्णुपत्नीस्यादष्टमंवैष्णवीत
था । नवमंशार्ङ्गिणीप्रोक्ता दशमंदेवदेवीच । एकादशं
तुलक्ष्मीस्याद्द्वादशंसुरसुंदरी । एवंध्यांत्वातरालेषु ह
रिद्राधारयेच्छ्रियम् । आरभ्यनासिकामूले ललाटां
तेलिखेन्मृदम् । नासिकायास्त्रयोभागा नासामूल
मितिस्मृतम् । अथप्राणायामंकृत्वा । रामेतिबी
जंजपन् पूरकं १६ कुंभकं ६४ रेचकम् ३२ अथ
वा मूलमंत्रंजपन् । पूरकम् ९ कुंभकम् ३६ रेच

कम् १९ इतिसर्वत्रप्राणायामंकृत्वा । प्राणायामे
किंप्रमाणं । आदावंतेतथामध्येप्राणायामंसमाच
रेत् । यद्वा प्राणायामत्रयंकृत्वा पश्चान्न्यासंसमाच
रेत । अथकुशपवित्रीधारणविधिः । अंगुल्यग्रेत
पोवृद्धिर्मध्येचायुश्चसश्रियम् । मूलेनतुविनाशंस्या
त्तस्मान्मूलेनधारयेत् । गायत्र्यादौअघमर्षणंकु
र्यात् । अथभगवत्कैंकर्यसिद्ध्यर्थमघमर्षणसंध्या
महंकरिष्ये इतिसंकल्पः । अत्राचमनंप्राणायामंच
कृत्वा । मूलमंत्रंपाठित्वादाक्षिणहस्तेनजलंगृहीत्वाद

क्षिणनासासंस्पृश्य दक्षिणावर्त्यंभूमौनिःक्षिपेत् ।
ॐनमःइति मंत्रेणांजलिनाजलमादायवामहस्त
स्थंदाक्षिणेनाच्छाद्याष्टवारम् ॐह्रींजानकीवल्लभा
यस्वाहेतिमंत्रेणमूलेनवाऽभिमंत्र्यापिबेत् पुनस्तथै
वत्रिराचम्य । पुनश्चांजलिनाजलमादायदाक्षिणह
स्तस्थंवामेनाच्छाद्य । ॐनमोभगवतेरघुनंदनाय
रक्षोघ्नाय विशदाय मधुरप्रसन्नवदनाय मिततेजसो ब
लायरामायविष्णवेनमः । इतिमंत्रेणसकृदाभिमंत्र्य

तज्जलंवामहस्तेनिक्षिप्य तदंगुलिविवरगतजलबिंदु

भिरात्मानंतेनैवमूलेनवाअष्टवारंमार्जयित्वा । पुनः तथैवजलमादायदक्षिणहस्तस्थंवामेनाच्छाद्य ॐन मोभगवतेइतिसकृदभिमंत्र्य । दक्षिणानासारंध्रेणा घ्रायतज्जलंशरीरांतर्गतं सर्वकलुषमाक्षालितं तत् कृष्णवर्णं ध्यात्वा । वामनाड्यानिर्गतंपुनर्हस्तमाग तमितिविभाव्य । वामभागेकल्पितवज्रशिलायां ॐरःअस्त्रायफट् । इतिमंत्रेणगाढमास्फालयेत् । इतिअघमर्षणम् । अहंरामोनचाऽन्योस्मिब्रह्मैवा हंनशोकभाक् । सच्चिदानंदरूपोहंनित्यमुक्तस्व

भाववान् । ततोमार्जनं । ॐअपवित्रःपावित्रोवेति
॥१३॥ मंत्रेणमार्जनम् । अत्राचम्य । अथभूतशुद्धिंकुर्यात्
श्रीरामाराधनयोग्यतासिद्ध्यर्थं भूतशुद्धिमहंकरिष्ये
इतिसंकल्पः । अत्राचमनं षडंगन्यासंप्राणायामं
चकारयेत् । कूर्ममुद्रयाहृदादिस्थितं दीपकणिकाकार
जीवज्योतिः परंतेजसिलीनंविचिंत्य । तत्रैव ।
पृथ्व्यप्तेजो-वाय्वाकाशाहंकार-महत्तत्त्व-प्रकृत्यंतानि
तत्वानिलीनान्यात्मनि विचिंत्य । वामकु ॥१३॥
क्षौंकृष्णवर्णंपापपुरुषंयातयांरंवंशंलंहं । यं इतिमं

त्रेणशरीरपापशोषणं । रं इतिमंत्रेणशरीरपापदहनं ।
वं इतिमंत्रेणभस्मोच्चाटनं । शं इतिमंत्रेणचन्द्रमासृ
तवृष्टिकरणम् । तेन देहोत्पत्तिंविभाव्य । लं इतिमंत्रेण
देहंदृढंकृत्वा । हं इतिमंत्रेणाकाशबीजेनदेहसुषिरा
णिविभावयेत् । एकैकबीजंषोडशवारंजपेत् । पूरकम्
॥ १६ ॥ चतुःषष्टिवारंजपन्कुंभकं ॥ ६४॥ द्वात्रिंशद्वारं
जपन्रेचयेत् ॥ ३२ ॥ षट्बीजैः प्राणायामद्वयंकुर्यात् ।
वायुबीजंअग्निबीजंपूरकं ॥ वरुणबीजंचंद्रबीजंकुंभकं ॥
पृथ्वीबीजं आकाशबीजंरेचकः । इतिप्राणायामद्व

यंकुर्यात्। इतिभूतशुद्धिः। अथप्राणप्रतिष्ठा। ॐ अस्य श्रीप्राणप्रतिष्ठामंत्रस्यब्रह्मविष्णुमहेश्वराऋषयः ऋग्यजुःसामानिछंदांसि। प्राणशक्तिर्देवता। आँबीजम्। ह्रींशक्तिः। क्रौंकीलकम्। प्राणप्रतिष्ठार्थेजपेविनियोगः। इतिसंकल्पः। अत्राचमनम्। षडंगन्यासम्। प्राणायामंचकुर्यात्। ॐ प्राणप्रतिष्ठामंत्रायनमः मूर्ध्नि। ब्रह्मविष्णुमहेश्वरऋषिभ्योनमः सिरसि। ऋग्यजुस्सामछंदोभ्योनमःमुखे। प्राणशक्तिर्देवतायैनमः हृदि। आँबीजायनमः दक्षिणस्तने। ह्रींशक्तयेनमोवा

मस्तने । क्रौंकीलकायनमःनाभौ । प्राणप्रतिष्ठायैन
मः पादयोः । जपे विनियोगायनमःसर्वांगे । मूलेनंकर
न्यासंहृदयादिन्यासंचकुर्यात ततोहृदिहस्तंदत्वा ।
ॐआँह्रींक्रौंयंरंलंवंशंषंसंहं ममप्राणाइहप्रतिष्ठंतुस्वाहा ।
ॐआँह्रींक्रौंयंरंलंवंशंषंसंहं ममजीवइहास्थितःस्वा
हा । ॐआँह्रींक्रौंयंरंलंवंशंषंसंहंममवाङ्मनश्चक्षुश्श्रो
त्रघ्राणप्राणइहागत्य सुखंचिरंतिष्ठंतुस्वाहा । ततोहृ
दयंस्पृश्य । द्वादशप्रणवावृत्त्या यथोचितंसंस्कारान्
भावयेत् । इतिप्राणप्रतिष्ठाविधिः । आदौऋष्यादिकं

 न्यासंकरशुद्धिस्ततःपरं ॥ हृदादिव्यापकंन्यासंपद 
 न्यासंतथैवच । अक्षरन्यासंध्यानंचपूजाजपोनाति
स्तथा ॥ विसर्जनंततःकुर्यातदभीष्टफलसिद्धये ॥
अथरामगायत्रीसंध्याविधिः । आवाहनसंकल्पः ।
ऋष्यादिन्यासः । करन्यासः । अंगन्यासः । पद
न्यासः । अक्षरन्यासः । ध्यानजपविसर्जनानि अत्रो
दकंगृहीत्वाततःसंकल्पमुच्चारयेत् ॐ अस्यश्रीरा
मगायत्रीमंत्रस्यवामदेवऋषिरनुष्टुप्छन्दः । श्रीजा 
नकीवल्लभोदेवता । श्रीरामेतिबीजं । दाशरथाये

तिशक्तिः । गायत्र्यावाहनेजपेविनियोगः । इतिसं
कल्पः । पुनराचम्य । षडंगन्यासम् । रामेति
बीजंजपन्पूरकम् ॥ १६ ॥ कुंभकम् ॥६४ ॥रेचकम्
॥ ३२ ॥ अथवामूलमंत्रंजपन् । पूरकम्॥९॥ कुम्भकम्
॥ ३६ ॥ रेचकम् ॥ १८ ॥ इतिसर्वप्राणायामंकृत्वा
ॐश्रीरामगायत्र्यासूर्य्यमंडलादावाहनंकुर्यात् । आ
वाहयाम्यहंदेविहृदयेममसुंदरि । आगच्छवरदेदेवि
त्रिपादेरामवादिनि । गायत्रिछंदसांमातर्रामयोने
नमोस्तुते । इत्यावाहनम् । श्रीसीतायैस्वाहा । इति

मंत्रेणासनंदद्यात् । ततःपाद्यार्घ्याचमनीयपूजादी
निचकारयेत् । ततोमुद्राम्प्रदर्शयेत् । संमुखंसंपुटंचै
ववितंतंविस्तृतंतथा । एकखमुंद्विमुखंचैवचतुः पंच
मुखंतथा । षण्मुखमधोमुखंचैवं व्यापिकांजलि
कंतथा । शकटंयमपाशंचग्रथिनंचोन्मुखोन्मुखं । प्र
लंबंमुष्टिकंचैव मत्स्यंकूर्मंवराहकं । सिंहाक्रांतं
महाक्रांतं मुद्गरंपल्लवंतथा । एतामुद्राश्चतुर्विंशति
गांयत्र्यादौप्रतिष्ठिताः । एतामुद्रानजानातिगायत्री
निष्फलाभवेत् । ॐ दाशरथायविद्महे । सीतावल्लभा

यधीमहि। तन्नोरामःप्रचोदयात् । ॐकारस्यजानकी ऋषिर्गायत्रीछंदः । श्रीरामोदेवता रांबीजं नमःशक्तिः रामायकीलकं श्रीरामप्रीत्यर्थेजपेविनियोगः । इति संकल्पः । अत्राचमनषडंगन्यासंप्राणयामंचकारयेत्। ॐकारस्यजानकीऋषयेनमःशिरसि । गायत्रीछंदसेनमः मुखे ।श्रीरामदेवतायैनमःहृदि। रांबीजायनमःगुह्ये । नमःशक्तयेनमःपादयोः । रामायकीलकायनमः सर्वांगे । इतिऋष्यादिन्यासः ॐ दाशरथायअंगुष्ठाभ्यांनमः। विद्महेतर्जनीभ्यांनमः । सीतावल्ल

रा० भायमध्यमाभ्यांनमः । धीमहिअनामिकाभ्यांनमः । ५०
॥१७॥ तन्नोरामः कनिष्ठिकाभ्यांनमः । प्रचोदयातकरतल
करपृष्ठाभ्यांनमः । इतिकरन्यासः ॥ ॐ दाशरथायहृ
दयायनमः । विद्महेशिरसेस्वाहा । सीतावल्लभायशि
खायैवषट् । धीमहिकवचायहुं । तन्नोरामःनेत्राभ्यां
वौषट् । प्रचोदयादस्त्रायफट् । इतिअंगन्यासः । ततः
प्राणायामंकृत्वा ॐ दाशरथायमूर्ध्नि । विद्महेभ्रुवोर्म
ध्ये । सीतावल्लभायहृदये । धीमहिनाभौ तन्नोराम ॥१७॥

लिंगे । प्रचोदयात्पादयोः । इतिपदन्यासः । ॐदाका

रंपादतलयोः । ॐशकारंपादांगुष्ठयोः । ॐरकारंगुल्फयोः । ॐयकारंजंघयोः । ॐविकारंजान्वोः । ॐ दकारंऊर्वोः । ॐमकारंगुदे । ॐहेकारंलिंगे । ॐसीकारंकटया । ॐताकारंनाभौ । ॐवकारमुदरे । ॐह्लकारंस्तनयोः । ॐभाकारंहृदये । ॐयकारंकंठे । ॐधीकारंमुखे । ॐमकारंतालुदेशे । ॐ हिकारंनासिकाग्रे । ॐतकारंनेत्रयोः । ॐ न्नोकारंभ्रुवोर्मध्ये । ॐराकारंललाटे । ॐमकारंपूर्वदिशि । ॐप्रकारंदक्षिणदिशि । ॐचोकारंपश्चिमादिशि । ॐदकारंउत्तरादिशि । ॐया

कारंमूर्ध्नि । व्यंजनतकारंसर्वव्यापकं । इत्यक्षरन्या
सः । अथध्यानम् ॥ हस्तद्वयेनकमलंधारयंतींसलील
या ॥ हारनूपुरसंयुक्तालक्ष्मींदेवींविचिंतयेत् । ॐश्रीं
श्रियैनमः । वंदेलक्ष्मींपरशिवमयींशुद्धजांबूनदाभां
तेजोरूपांकनकवसनां सर्वभूषोज्ज्वलांगीं । बीजापू
रंकनककलशंहेमपद्मंदधानामाद्याशक्तिंसकलजननींवि
ष्णुवामांकसंस्थां । इतिध्यानं । ध्यानंतुकीदृ
शम् प्रातःकालेब्रह्मरूपिणी श्वेतवर्णाहंसवाहिनी ।
मध्याह्नेरुद्ररूपिणीधूम्रवर्णावृषभवाहिनी । सायं

कालेविष्णुपत्नीपीतवर्णाखगेन्द्रवाहिनी । एवंगाय
त्रीत्रिकालेप्रवर्तते । एवंध्यात्वाजपेन्मंत्रंसहस्रंतुदिने
दिने । अष्टोत्तरशतंवाऽपित्रिशतंवातथाक्रमः । ॐ दा
शरथायविद्महे सीतावल्लभायधीमही । तन्नोरामः प्र
चोदयात् इतिमंत्रं जपन् । जपांतेआचमनम् । षडंगन्या
संचकारयेत् ॥ ॐवाक् ॐवाक् ॐप्राणः ॐप्राणः । ॐ
चक्षुः ॐचक्षुः एवंषडंगन्यासम् । ततः प्रणायामंचका
रयेत् पुनरष्टौमुद्राः प्रदर्शयेत् । सुरभिज्ञानवैराग्ययो
निकूर्मोऽथपंकजम् । लिंगेनिर्वाणमुद्राश्चजपांतेऽष्टौ

प्रकीर्तिता: । ततःस्तुतिमुच्चारयेत् । जयतुजयतुल
क्ष्मीर्लक्ष्मणालंकृताङ्गी जयतुजयतुपद्मापद्मसद्मा
दिवंद्या । जयतुजयतुविद्या विष्णुवामांकसंस्था
जयतुजयतुसम्यक् सर्वसंपत्करीश्रीः जयतुजयतु
देवीदेवसंघाऽभिपूज्या । जयतुजयतुभद्राभार्गवी
भाग्यरूपा । जयतुजयतुनित्या निर्मलज्ञानवेद्या ।
जयतुजयतुसत्यासर्वभूतांतरस्था । जयतुजयतुर
म्यारत्नगर्भांतरस्था । जयतुजयतुशुद्धाशुद्धजांबून
दाभा जयतुजयतुकांताकांतिमद्भासितांगी जयतुज

यतुशांताशीघ्रमागच्छसौम्या । अथविसर्जनं ॥ उ
त्तरेशिखरेजाताभूम्यांपर्वतमूर्धनि । वैष्णवैःसमनुज्ञा
तागच्छदेवियथासुखम् । पाहिदेविवेदमातःसूर्यसह
शवर्चसं । प्रविश्यपरमात्मानंज्योतिरूपंनमोस्तुते ।
इतिविसर्जनम् । त्रिषुकालेषुगायत्र्यावाहनादिकंकृ
त्वाश्रीजानकीवल्लभंसमर्पयेत ॥ अथतर्पणविधिः । अ
द्येहअमुकगोत्रोऽमुकदासः श्रीसीतारामप्रीत्यर्थंगुरु
भगवद् भगवदानुयायिना अक्षयतृप्तिकामःकूर्चोद
केनतर्पणमहंकरिष्ये इतिसंकल्पः । ॐआदिगुरुंतर्प

 यामि । ॐमहागुरुंतर्पयामि ॐ अस्मद्गुरुंतर्पयामि । 
 ॐसर्वगुरुंतर्पयामि । ॐनमोभगवतेविष्णवेसर्वभूता
त्मने वासुदेवायसर्वात्मनेसंयोगपीठात्मनेनमः । ॐ
संयोगपीठात्मकंरामंसंतर्पयामि इतिपीठदेवान्संतर्प
यामि । मूलमंत्रमुच्चार्य श्रीरामंसं तर्पयामि । इत्यष्टाविंश
तिवारंतीर्थजलेनसंतर्पयेत् । श्रीसीतादींश्चसंतर्पया
मि श्रीसीतायैस्वाहा ः इतिसीतांसंतर्पयामि । ॐलंल
क्ष्मणायनमः । इतिलक्ष्मणंसंतर्पयामि । ॐ भंभर 

तायनमः । इतिभरतंसंतर्पयामि । ॐशंशत्रुघ्नायन

मः । इतिशत्रुघ्नंसंतर्पयामि । ॐशंशार्ङ्गायनमः । इति शार्ङ्गंसंतर्पयामि । ॐ शंशरेभ्योनमः । इतिशरान् संतर्पयामि । मूलेनांजलिंदत्वा । ॐहंहनुमतेनमः । हनुमंतंतर्पयामि । ॐवंवरुणायनमः । वरुणंतर्पयामि । एहिसूर्यसहस्रांशोतेजोराशेजगत्पते । अनुकंपयमांभक्त्यागृहाणार्घ्यंदिवाकर । ॐसंसूर्यायनमः सूर्यंतर्पयामित्रिवारम् । ॐनमोरामाय जानकीवल्लभायनमः । इतिमंत्रेण ब्रह्माविष्णुश्चरुद्राश्चसर्वदेव मुनीश्वरान् । मातृपितृपितृंश्चापितर्पयामिनमोऽस्तु

ते । एवंसर्वतीर्थानिसूर्यमंडलादागतानिसूर्यमंडलंग
च्छंतु । इतिविसर्जनम् । इतिसंध्याविधिः । कस्मि
न्कालेकस्यांदिशि । प्रातःप्राङ्मुखश्चैवमध्यान्हेतु
उदङ्मुखः । सायंप्रत्यङ्मुखश्चैव एवंसंध्यांसमाचरे
त् । ततोश्रीसीतारामाराधनार्थंमंदिरंगच्छेत् । शांडि
ल्यस्मृतौ । प्रातःकृत्यमकृत्वातुयःपूजयतिकेशवम् ।
तस्यपूजानिष्फलास्यान्मद्यस्पर्शंपयोयथा । तस्मा
त्पूर्वंप्रयत्नेननित्याचारंसमाचरेत् । नित्याचारंसदा
कुर्यातसासंध्याविद्धयनादिकम् । ततोमंत्रविधिः ।

आदौऋष्यादिकन्यासंकुर्यात् । न्यासंविनाभवेन्मू
कोबाधिरोध्यानवर्जितः । ऋषिर्दैवताछंदोभिः परि
त्यक्तोभुजंगमः ॥ तस्मान्न्यासादिकंकर्मविधियुक्तः
समाचरेत । अत्रोदकमाहरेत् । ॐ अस्यश्रीरामषड
क्षरमंत्रस्य । श्रीजानकीऋषिः गायत्रीछंदः । श्रीरा
मोदेवता । रामितिबीजम् । नमः । इतिशक्तिः । रामाये
तिकीलकम् श्रीसीतारामप्रीत्यर्थे जपेविनियोगः ।
इतिसंकल्पः । अत्राचमनंप्राणायामंचकारयेत् ।
श्रीजानकीऋषयेनमः शिरसि । गायत्रीछंदसेनमःमुखे ।

 श्रीरामदेवतायैनमः हृदि । रांबीजायनमोगुह्ये । 
 नमःइतिशक्तयेनमोपादयोः । रामायकीलकायनमः
सर्वांगे । इतिऋष्यादिन्यासः । ॐ रांरींरूंरैंरौंरः । ॐ
रांअंगुष्ठाभ्यांनमः । ॐ रींतर्जनीभ्यांनमः । ॐरूंमध्य
माभ्यांनमः । ॐरैंअनामिकाभ्यांनमः । ॐरौंकनि
ष्ठिकाभ्यांनमः । ॐ रःकरतलकरपृष्ठाभ्यानमः । इ
तिकरन्यासः । ॐ राहृदयायनमः । ॐरींशिरसेस्वा
हा । ॐरूंशिखायैवषट् ॐरैंकवचायहुं । ॐरौंने 
त्राभ्यावौषट् । ॐरःअस्त्रायफट् । इतिअंगन्यासः

ततस्तालत्रयंकृत्वा। मूलमंत्रेणादिशांदिग्बंधनंकृत्वा।
ॐ रांरक्षतुप्राच्यां। ॐ रांरक्षतुदाक्षिणस्यां ॐ रा
रक्षतुप्रतीच्यां ॐ रांरक्षतुकौबर्य्यां। ॐरांरक्षतु
आग्नेया। ॐ रांरक्षतुनैर्ऋत्यां ॐ रांरक्षतुवायव्यां।
ॐरांरक्षतुईशान्या। ॐरांरक्षतुऊर्द्ध्वं। ॐरांरक्षतु
अधः। इतिदिग्बंधनम्। ॐरांनमोमूर्द्धि। ॐ रांन
मोभ्रुवोर्मध्ये। ॐ मांनमःहृदि। ॐयंनमोनाभौ।
ॐ नंनमो गुह्ये। ॐ मंनमःपादयोः। इतिअक्षरन्यासः
ॐ रांनमो मूर्द्धि। ॐ रामायनमो हृदि। ॐ नमो

नमः पादयोः । इतिपदन्यासः । ततोरामोतिबीजं
षोडशवारंजपन्पूरकंविधाय । ततश्चतुष्षष्टिवारंत
देवजपेत्कुंभकम् । द्वात्रिंशद्वारंजपन्रेचयेत् । इति
प्राणायामोभवति । अथध्यानम् । ध्यायेत्कल्पतरो
मूलेसुवर्णमयमंडपे । पुष्पकाख्यविमानेतुसिंहासन
परिच्छदे । पद्मेवसुदलेदिव्यामिंद्रनीलमणिप्रभं ।
वीरासनसमारूढंदिव्यमुद्रोपशोभितं । वामेचजान
कीयुक्तंदक्षिणेलक्ष्मणान्वितम् । सर्वधर्मैणसम्पन्नं ध्या
त्वारामंजपेन्मनुः । इतिध्यानम् । ततोजपम् । रां

रामायनमः । इतिस्मृत्वाजपेन्मंत्रंषट्सहस्रांदिनेदि
ने । अष्टोत्तरसहस्रंवा त्रिशतंवाऽस्वशक्तितः । तदुत्त
ररामगायत्रीन्यासंप्राणायामंचकृत्वा । गायत्रींज
पेत् एवंसंध्याविधिः । आदौसंध्यावंदनंहिततः पूजां
चकारयत् । षडक्षरेणमंत्रेणपूजयित्वाविधानतः ।
पश्चाद्द्वादशसाहस्रंसंख्यायाषट्सहस्रकं । त्रिशतंश
क्तितोजप्त्वापश्चाद्धोमंसमाचरेत् । जपादौचजपां
तेवागायत्रींचपठेन्नरः । वाचकंत्वेकगुणितंउपांशुश
तमुच्यते । सहस्रंमानसंप्रोक्तंत्रिविधंजपलक्षणम् ।

 षट्लक्षंचपुरश्चरणंहोमंतुतद्दशांशकम् । तद्दशांशंत 
॥२४॥ र्पणंचदशांशेनचमार्जनम् । दशांशंब्राह्मणभोजनंपु
रश्चर्याविधिस्त्वयम् । जपेकिंकर्तव्यम् । पूर्वाश्रम
स्तुरीयस्तुनारीसंगंविवर्जयेत् । जपेन्मौनंतथायो
गोब्रह्मचर्यंदमस्तथा । लोभमोहौमानमदौत्यजेत्स
र्वंनिरंतरम् । मत्सरद्वेषरोषोक्तिर्निद्रालस्यादिवर्जये
त् । स्वयंजपन्वास्वकृत्यंश्रीरामायसमर्पयेत् । जपे
न्मंत्रंसदामंत्रीयावज्जीवंजितेंद्रियः । स्नात्वाशुक्लां ॥२४॥

[illegible]कृतकृत्यायथाविधि । तदैवेहविना[illegible]पारु

प्यत्वमवाप्नुयात् । तस्यप्राप्तिरनुसंधानरहितमकदा
चन । अनुसंधानंजपस्यैवफलंविदुर्महर्षयः । अथ
पूजाविधिः । उदकंचंदनंचक्रंशंखंचतुलसीदलं । घं
टानादंशिलाताम्रमष्टभिश्चरणोदकम् । त्रिपुलोकेषु
यत्तीर्थंतेषुस्नानेषुयत्फलं । विष्णुपादोदकंमूर्ध्नाधार
णात्सर्वमाप्नुयात् । ध्यात्वैवंमानसोपचारैः पूजयित्वा
पुनःपुनः । गुरुदत्तमंत्रेणैवपूजांप्रत्यक्षमाचरेत् । ॐ
क्लींरांरामायनमः । गंधपुष्पधूपदीपनैवेद्यताम्बूलानि
समर्पयामि । इति पूजयेत् । तथैव । श्रीसीतायैस्वा

हः । इति मंत्रेणश्रीसीतांपूजयेत् । ॐलंलक्ष्मणाय
नमः । श्रीलक्ष्मणंपूजयेत् । ॐ भंभरतायनमः । श्री
भरतंपूजयेत् । ॐ शंशत्रुघ्नायनमः । श्रीशत्रुघ्नंपूज
येत् । ॐ शंशार्ङ्गायनमः । शार्ङ्गंपूजयेत् । ॐ शंशरे
भ्योनमः । शरंपूजयेत् । ॐहंहनुमतेनमः । श्रीहनु
मंतंपूजयेत् । ॐसशार्ङ्गायसपरिवारायसवाहनाय
सायुधाय श्रीरामाय गंधपुष्पधूपदीपनैवेद्यताम्बूलानि
समर्पयेत् । श्रीजानकीनाथायपुष्पाञ्जलिंदत्वा । ब
लिर्विभीषणोभीष्मोकपिलोनारदोऽर्जुनः । प्राह्लादो

जनकाव्यासौ अंबरीषस्तथैवच । विष्वक्सेनोद्धवो
ऽक्रूरोध्रुवोहनुमानेवच । सनकाद्याः शुकादयश्चैतेरा
मप्रसादंगृह्णंतु । शयनविधिः । आयताभ्यांविशाला
भ्यांशीतलाभ्यांकृपानिधे । करुणापूर्णनेत्राभ्यांकु
रुनिद्रांजगत्पते । अथोत्थापनं । उत्तिष्ठोत्तिष्ठश्रीरा
मउत्तिष्ठजानकीपते । उत्तिष्ठजानकीनाथत्रैलोक्यं
मंगलंकुरु । उत्तिष्ठोत्तिष्ठभद्रंतेत्यजनिद्रांजगत्पते ।
त्वयिउत्थीयमानेतुउत्थितंभुवनत्रयं । मंत्ररूपंप्रव
क्ष्यामि शृणुनारदतत्परम् । रकारादिमकारांतं मंत्रं

षड्वर्णसंयुतं ॥ अथऋग्वेदेपञ्चसंस्कारप्रारम्भः । अथ 
मुद्राविधिः । श्रीरामपूजामध्ये मुद्रांधारयेत् । ॐश्री
रामनत्वामुद्राःपञ्चतत्त्वतोय आत्मनोनिर्धारयेत् ।
सश्रीरामस्यानुचरोभवति । इतिऋग्वेदेप्रथमःसं
स्कारः ॥ १ ॥ ॐ योवैलोकपावनींतुलसीकाष्ठजांमा
लिकांकण्ठेधारयतिसजीवन्मुक्तोभवति । इतिऋग्वे
दे द्वितीयःसंस्कारः ॥ २ ॥ ॐ योसौगोपीचन्दनवेणु
पत्राकारमूर्ध्वपुण्ड्रंतिलक द्वादशं पञ्चमं यथासंख्यमा 
त्मनोनिर्धारयति शंखचक्रांकितानवत्राणिच सश्रीरा

मस्यानुचरोभवतिस्मरततोभवति । इतिऋग्वेदे
तृतीयः संस्कारः ॥३॥ ॐ रांरींरूंरौंरः । ॐयोहंसःसोहं
परमात्मानंस्मरते समहीयान्परात्परेलोके पूज्यो
भवति । इतिऋग्वेदेचतुर्थः संस्कारः ॥ ४ ॥ ॐयोसौ
नासाग्रे परमात्मानंसत्यंनित्यंजपति ध्यानविशेषो
भवति श्रीरामंसंध्यायातिसमहात्माभवति श्रीरामे
सदामतिर्भवति । इतिऋग्वेदेपंचमःसंस्कारः॥ ५॥ त
थाचागमे । उद्यतोवतसहृदःपुरुषःसजीवन्मुक्तोभव
तिपरमात्मनः सप्रियोभवति कृत्यकृत्योभवति । इ

रा० तिऋग्वेदपंचसंस्कारान् कथितान् धृतवान् महत्पुरुषः प०
॥२७॥ परमार्थंपरमतत्त्वंसैवपरंधाम नित्यंप्राप्नोति तरणता
रणोभवति । इतिऋग्वेदे श्रेष्ठागमपरिचयाग्नीये । पुंड्र
मुद्रातथानाममालामंत्रश्चपंचमः । अमीहिपंचसंस्का
राः पारमैकांतहेतवः । इतिऋग्वेदपंचसंस्काराः ॥ १ ॥
अथसामवेदेपंचसंस्काराः । अथपंचसंस्कारानुभा
वयेत् । ॐ श्रीकृष्णनामाङ्कितमुद्रापावनीयआत्मनो
निर्द्धारयति शंखचक्रांकितवस्त्राणिच सपुण्यवान्श्री
कृष्णस्यानुचरोभवति । इतिसामवेदेप्रथमःसंस्का ॥२७॥
रः ॥ १ ॥ ॐ यावैलोकपावनीतुलसीकाष्ठजामालि

कांकंठेनिर्धारयातिसजीवन्मुक्तोभवति सलोकेपावनो
भवति । इतिसामवेदेद्वितीयःसंस्कारः ॥ २ ॥
ॐ योसौगोपीचंदनेनवेणुपत्राकारमूर्ध्वपुंड्रंनासिका
द्यंकेशपर्यन्तं तिलकंद्वादशंपंचमंवास्वात्मनोनिर्धार
यातिसपुण्यवान्श्रीकृष्णस्यानुचरोभवतिसलोकेपूज्यो
भवति । इतिसामवेदेतृतीयःसंस्कारः ॥ ३ ॥ ॐ
योऽसौपरमात्मनः श्रीकृष्णस्यनामस्वरेणमंत्रेणसदा
हृदिस्थंपरात्परंध्यायाति सयातिमहतोमहीयान् स
त्रैलोक्येपूज्योभवति । इतिसामवेदेचतुर्थःसंस्का
रः ॥ ४ ॥ ॐयोसौनामयज्ञेनपरमात्मानंस्वरेणानि

 त्यंयजाति ध्यानावास्थितः श्रीकृष्णंयोध्यायाति समह 
 त्पुरुषोमहतोमहियान्सनित्यंगोविंदस्यसहृशः । इ
तिसामवेदेपंचमःसस्कारः ॥ ५ ॥ ॐयोऽसौपंचसंस्का
रान् धृतवान्समहत्पुरुषः सजीवन्मुक्तःपरमात्मन
स्सप्रियोभवाति तस्यदर्शनात्पावनोभवाति सामवेदे
कथितान्संस्कारानधृतवान्परमार्थपरायणः सवैप
रमधामनित्यरूपोभवाति तरणतरणोभवाति । इति
सामवेदेषट्परीक्षास्तथाहिचागमे । पुंड्रमुद्रातथाना
ममालामंत्रश्चपंचमः । अमीहिपंचसंस्काराःपारमैका 
न्तहेतवः । इतिसामवेदेपंचसंस्काराः ॥ २ ॥ अथाथ

र्ववेदे पंचसंस्काराः ॥ संप्रदायानुसारेण यथाक्रमं प्रद
र्श्यंतो प्रथमं अथर्ववेद आरक्तकेशिशाखायां ॐ हरि
पादाकृतिं यो धारयाति समहात्मा विष्णुप्रियो भवति ।
इति अथर्ववेद प्रथमः संस्कारः ॥ १ ॥ ॐ उर्ध्वपुंड्रं म
स्तके धारयाति समहात्मा दंडकमंडलुं धौतवस्त्रं पवित्रं
हृदये भक्तिं गुरुवाक्यं च धारयाति सजीवन्मुक्तो भव
ति । इति अथर्ववेदे द्वितीयः संस्कारः ॥ २ ॥ ॐ रामकृष्ण
हरिरिति षडक्षरमंत्रः । इति अथर्ववेदे तृतीयः संस्का
रः ॥ ३ ॥ गंगास्नानं गंगोदकं रक्षावृत्त धारी इहाचार्य्य
वानन्निलौं भीकंदमूलाहारः सत्रैलोक्ये पूज्यो भवति ।

राा० इतिअथर्ववेदेचतुर्थः संस्कारः ॥ ४ ॥ ॐ सोहंहंसः प०
तत्वमसीति महावाक्यं मंत्रंशुक्लवर्णगर्गऋषिमाधवा
॥२९॥ चार्य्यैः । सहविष्णुस्मरणंस्वाहा । इतिअथर्ववेदेपं
चमःसंस्कारः ॥ ५ ॥ तथाचागमे । ॐ पुंड्रंमुद्रातथाना
ममालामंत्रस्तुपंचमः । अमीहिपंचसंस्काराःपारमै
कांत्यहेतवः। इतिअथर्ववेदेपंचसंस्काराः ॥ ५ ॥ इति
चतुःसंप्रदायानुयायिनांपंचसंस्काराः । श्रीरामस्य
दासोभवतिदासोऽयमस्मीतियः । पंचसंस्कारसंस्कृ
तोयः सवैष्णवोनान्यथेतिभावः । योयंस्मरेत्सतद्रू ॥२९॥
पोभवतिकीटभृंगन्यायेनतरति शोकमात्मवित ।

ब्रह्मविद्ब्रह्मैवभवति । छिद्यतेहृदयग्रंथिःभिद्यंतेसर्वसं
शयाः । क्षीयंतेचास्यकर्माणितस्मिन्दृष्टेपरावरे ।
सकृत्कृतकृत्योभवति । तापः पुंड्रंतथानाममंत्रोयोगश्च
पंचमः । एतद्गुरुप्रसादेननान्यथावैप्रलभ्यते । सुदर्शन
महाज्वालकोटिसूर्य्यसमप्रभ । अज्ञानांधस्यमेदेव
विष्णोर्मार्गंप्रदर्शय । पांचजन्यनिजध्वांतध्वंसितंपा
पसंचयं । पाहिमांपापिनंघोरंसंसारार्णवपातिनम् ।
श्रीरामवामहस्तस्थधनुर्धर्माभिपालक ॥ कामादिना
भिभूतस्यराममार्गंप्रदर्शय ॥ श्रीरामसव्यहस्तस्थ
शराहितविनाशन ॥ सर्व्वज्ञातसमाज्ञाोचिराममार्गंप्र

दर्शय ॥ श्यामंशांतिकरंप्रोक्तंरक्तंवश्यकरंतथा । श्री
॥३०॥ करंपीतमित्याहुःश्वेतंमोक्षप्रदंशुभम् । छिद्रेणचान्वितं
पुंड्रंहरिद्रासंयुतंशुभम् । धारयेद्वैष्णवोनित्यंहरिसा
लोक्यसिद्धये । नासिकाकेशपर्यंतंदंडाकारोपशोभि
तम् । मध्यच्छिद्रसमायुक्तंकथ्यतेहरिमंदिरं । ऊर्ध्वपुंड्र
मृजुंसौम्यंललाटोपरिशोभितं । चांडालोपिविशुद्धा
त्मापूजामाप्नोतिधारणात् । सर्पदृष्टायथालोकेदर्दुरा
भयकंपिताः । ऊर्ध्वपुंड्रांकितंतद्वत्कंपंतेयमकिंकराः ॥

इति श्रीअयोध्यानिवासिनाश्रीभगवन्नारायणवंशोद्भवपंडितराम ॥३०॥
नारायणदासेनसंशोधिताश्रीमद्रामानुजाचार्यकृतालघुरामपद्धतिः ।

# डाकोरकी ( रणहरपुस्तकालयकी ) सूचीपत्र.

प्रवीन सागर—सटीक बडा अक्षरका,
बडा ( अलंकार ग्रंथ ) .... १२—०

श्रीडाकोर माहात्म्य-भा.टी.सर्वोपयोगी १—०

दोसोबावन वैष्णवकी वार्त्ता-बडा अक्षर
व्रजभाषामें उत्तम ग्लेज कागदकी ४—०
,, तथा रफ कागदकी उत्तम जिल्द ३—०

चौराशी वैष्णवकी वार्त्ता—बडा अक्षर
व्रजभाषामें उत्तम ग्लेज कागदकी. २—०
,, तथा रफ कागदकी उत्तमजिल्द १—८

दोसोबावन वैष्णवकी वार्त्ता-और चो-
राशी वैष्णवकी वार्ता—व्रजभाषामें
बडाअक्षर उत्तम ग्लेज कागद
दोनों पुस्तकोंकी एक जिल्द ....६—०
,, तथा रफ कागद दोनोंकी एकजिल्द.४—८

भजन रत्नावली मोटी. ( अथवा )
भजनकी पोथी शुद्ध करके
और बढायके छपी बडा अक्षर ग्लेज १—८
,, ,, तथा रफ कागदकी १—४

श्रीरामतापनीयोपनिषद्-भाषाटीका तथा
श्री रामयोपनिषद् सटीका यन्त्रराजके
पूजाकी अनुक्रमणिकासहित ....१—०

प्रकाशक—बावारामदासजी गुरुश्रीगोकुलदासजी (रणहर पुस्तकालय डाकोर.)
मुद्रक—चिंतामण सखाराम देवळे, मुंबईवैभव प्रेस, सर्व्हंट्स ऑफ इंडिया सोसायटीज होम, सँढर्स्ट रोड, मुंबई नं. ४.

